# संस्कृत-वार्ता:

**13-12-2020**

**प्रातः - 06: 55**

**मुख्य-वार्ताः**

- प्रधानमन्त्री नरेन्द्र मोदी न्यगादीत् यत् भारतेन पेरिससंधे: अनुगुणं जलवायु-परिवर्तनं अवलम्ब्य लक्ष्यात् अधिकं प्राप्तम्।
- हरियाणाया: कृषकनेतार: ह्य: कृषिविधेयकसर्मथन- संदर्भे नवदिल्ल्यां कृषिमंत्रिणा नरेन्द्रसिंह तोमरेण सह सम्मेलनम् अकुर्वन्।
- प्रधानमन्त्रिणा नरेन्द्र-मोदिना देशे महामारीजन्यप्रकोपात्-जायमानायाम् उन्नतावनतस्थितौ परिस्कारगतौ प्रसन्नता व्यक्ता।
- भारतीय-अंतरिक्ष-अनुसंधान परिषदा **सीएमएस् एकम्** इति उपग्रहस्य प्रक्षेपणं अस्मिन् मासे सप्तदशदिनांके सुनिश्चितं कृतम् अस्ति।
- कोरोणा महामार्या: विरुध्य भारतं निरन्तरं साफल्य-पथे अग्रसर: अस्ति। स्वस्थता प्रतिशतम् संवर्ध्य पञ्चनवति दशमलव अष्ट-नव-परिमितं जातम्।
- चाबहार-जलपोतस्थानविषयकं सम्मेलनं श्वो भविष्यति।

**कोविड ओपनिंग**

- कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युद्ध्यते। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य सङ्ल्पं स्वीकुर्वन्तु
- **मुखावरंक सन्धारयन्तु -**
- **सामाजिकदौर्यं परिपालयन्तु,**
- **पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**<u>प्रधानमंत्री-जलवायु-परिवर्तनम्</u>**

प्रधानमन्त्री नरेन्द्र मोदी न्यगादीत् यत् भारतेन न केवलं पेरिससंधे: अनुगुणं जलवायु-परिवर्तनं अवलम्ब्य लक्ष्यं प्राप्तं अपितु एतस्माद् अधिकमपि प्राप्तम्। प्रधानमंत्री जलवायु-ईहा-सम्मेलने भाषमाण: आसीत्। श्रीमोदिनोक्तं यत् भारतेन अस्य सौरोर्जाक्षमता अभिवर्धिता चतुर्दश-उत्तर-द्विसहस्रतमे वर्षे षट्-त्रि-दशमलवोत्तर-द्वि गीगावाटमितं या आसीत् सा अधुना वर्तमानसमये षटत्रिंशत् गीगावाट्मितं वर्तते।

**<u>तोमन-कृषका:</u>**

हरियाणाया: कृषकनेतार: ह्य: नवदिल्ल्यां कृषिमंत्रिणा नरेन्द्रसिंह तोमरेण सह सम्मेलनम् अकुर्वन्। मेलनानन्तरं वार्ताहरै: सह वार्ता कुर्वन् श्रीतोमर: अवादीत् यत् कृषकनेतृभि: कृषिविधेयकस्य सर्मथने लिखितपत्राणि समर्पितानि। तेनोक्तं यत् कृषकै एतदपि ज्ञापितं यत् इमे नियमा: कृषकाणां हिताय वर्तन्ते।

**<u>प्रधानमंत्री-फिक्की</u>**

प्रधानमन्त्रिणा नरेन्द्र-मोदिना देशे महामारीजन्यप्रकोपात्-जायमानायाम् उन्नतावनतस्थितौ परिस्कारगतौ प्रसन्नता व्यक्ता। ह्य: नवदेहल्यां फिक्की इत्याख्यस्य भारतीय-उद्योग एवं च वाणिज्यमण्डल परिसंघस्य त्रिनवतितमे वार्षिकोपवेशने प्रधानमन्त्रिणा उक्तं यत्-आर्थिक-संकेतेभ्य: नवीना: आशा: जागरिता:। अस्य श्रेय: देशस्यास्य उद्यमीभ्य:, नवयुवकेभ्य: कृषकेभ्य:, सामान्यनागरिकेभ्यश्च दातुं शक्यते।

प्रधानमन्त्रिणा उक्तं यत् आर्थिक परिष्कारै: अनपेक्षिता: बाधा: दूरीक्रियन्ते । कृषिक्षेत्रं च अस्य उदाहरणमस्ति। स: उक्तवान् यत् अद्य ग्रामीणभारते उत्साहवर्धकानि परिवर्तनानि जायमानानि सन्ति। अन्तर्जालोपयोगकर्तार: जना: संप्रति नगरादधिका: ग्रामेषु सन्ति। देशस्य अर्धादधिका: नवोद्योगिन: लघुनगरेभ्य: एवं सन्ति। सर्वकार: कृषिबलानां आगमोत्थाने तेषां सुखसौविध्यादिवर्धने नैकान् निर्णयान् निर्णयन्नस्ति।

**<u>इसरो</u>**

भारतीय-अंतरिक्ष-अनुसंधान परिषदा **सीएमएस् एकम्** इति उपग्रहस्य प्रक्षेपणं अस्मिन् मासे सप्तदशदिनांके सुनिश्चितं कृतम् अस्ति। एतदुपग्रह: सी-बैण्ड्-इत्याख्य-आवृत्तिं अण्डमान-निकोबार द्वीपसमूहं यावत् विशेषेण प्रापयिष्यति।

**<u>कोरोणा</u>**

कोरोणा महामार्या: विरुध्य भारतं निरन्तरं साफल्य-पथे अग्रसर: अस्ति। स्वस्थता प्रतिशतम् संवर्ध्य पञ्चनवति दशमलव अष्ट-नव-परिमितं जातम्। विगते अहोरात्रे त्रयस्त्रिंशत्सहस्राद् अधिका: जना: स्वस्थतां गता:। स्वास्थ्यमंत्रालयेन निगदितं यत् अद्यावधि स्वस्थीभूतानां जनानां संख्या सपादत्रिनवतिलक्षपरिमिता जाता। देशे रोगिणां संख्या सम्प्रति षष्ठ्योत्तर त्रिलक्षपरिमिता अस्ति। अथ च परीक्षण-पर्यवेक्षण-उपचारादिभि: रुग्णानां संख्या न्यूनीभूता जायते। महामार्या: दुष्प्रभाव: विश्वस्य अपेक्षया साम्प्रतं भारते न्यून: वर्तते।

**<u>हर्षवर्धन:</u>**

केन्द्रीय-स्वास्थ्यमन्त्रिणा डॉ. हर्षवर्धनेन ह्य: नवदिल्यां दृश्यश्रव्यप्रणाल्या आयोजिते लेडीहार्डिंगमहाविद्यालयस्य दीक्षान्तसमारोहे प्रोक्तं यत् चिकित्सा-सेवा स्वास्थ्यप्रणाल्या: महत्वपूर्ण: भाग: वर्तते। तेन अवादि यत् सर्वकारस्य चिकित्साशिक्षा सर्वोच्चप्राथमिकतायाम् अस्ति। चिकित्सकानां विशेषज्ञानां च प्रशिक्षणेन गुणेन च देशस्य स्वास्थ्यस्तरस्य निर्धारणं भविष्यति । तेन निगदितं यत् चिकित्सा न केवलं वृत्ति: अपितु इयं सेवा अस्ति।

**<u>चाबहार</u>**

चाबहार-जलपोतस्थानविषयकं सम्मेलनं श्वो भविष्यति। अस्यां त्रिपक्षीयवार्तायां भारत-ईरान-उज्बेकिस्तान इति देशा: भागं ग्रहीष्यन्ति।

अनया वार्तया व्यापारिण: व्यापरसमुदायाश्च लाभान्विता: भविष्यन्ति। उज्बेकिस्तान देशमतिरिच्य केन्द्रीय-एशिया देशा: अपि अस्यां स्वरुचिं प्रदर्शितवन्त:। विदेशमन्त्रिणा निगदितं यत् भारतं अन्यै: राष्ट्रै: साकं पारस्परिकं सुसम्बन्धं प्रदर्शयति ।

**।। इति वार्ताः ।।**